# । श्री अणुवृन्दावनाख्यानम् ।

श्रीः

श्री हयग्रीवाय नमः

श्री वादिराजगुरुभ्यो नमः

अथ अणुवृन्दावनाख्यानम्

हयग्रीवं चिदानन्दविग्रहं सदनुग्रहम् ।
दशग्रीवच्छिदं शापान् मणिग्रीवविमोचनम् ॥ १॥

स्वनाम ग्रहणादेव निरस्तग्रह विग्रहम् ।
वृन्दावनगतं वन्दे ब्रह्मरुद्रेन्द्रवन्दितम् ॥ २॥

यो मां देवं विजानाति ऋजुस्थं पुण्यकृन्नरः ।
स याति निलयं पुण्यं यद्गत्वा न निवर्तते ॥ ३॥

विमानं दिव्यमानं च दीप्यमानं सदायनम् ।
वृन्दावनोपरिगतं पूजयन्तु सदा मम ॥ ४॥

पञ्चवृन्दावने पुण्ये पञ्चरूपात्मको हरिः ।
पञ्चीकृत्य स्वरूपाणि नित्यं सन्निहितः स्वयम् ॥ ५॥

अहं ब्रह्माश्च वायुश्च विष्णू रुद्रश्च पञ्चमः ।
रमाम नित्यमेवात्र श्वेतद्वीपे यथा वयम् ॥ ६॥

अहं सदा देवसभासुभाजितः सुभास्वरैः दिव्यविभूषणैर्युतः ।
अहं समानैः सुरमानिमानितः समानयुक्तैः सुमनोभिरञ्जसा ॥ ७ ॥

गुरुमखिलगुणज्ञं सद्गुणैकाधिवासं
शमदमपरिनिष्ठं सत्त्वनिष्ठं वरिष्ठम् ।
सकलसुजनशिष्टं नित्यनिर्धूतकष्टम्
हयमुखपदनिष्ठं मां भजन्तु प्रसन्नाः ॥ ८ ॥

तीर्थानामुत्तमं तीर्थं वनानामुत्तमं वनम् ।
क्षेत्राणामुत्तमं क्षेत्रं ममवृन्दावनं द्विज ॥ ९ ॥

तस्माद्वृन्दावनमिदं सर्वाभीष्टप्रदं सताम् ।
पञ्चवृन्दावने पुण्ये सुपर्वाणश्च सर्वदा ॥ १० ॥

वसन्ति पुण्यकर्माणो विशेषात्ते च पर्वसु ।
पञ्चम्यां च तिथौ नित्यं पञ्चपर्वसु पूजयेत् ॥ ११ ॥

धूपैर्दीपैस्तथा माल्यैर्गन्धैर्दूर्वाक्षतादिभिः ।
पञ्चभक्ष्यसमायुक्तं पञ्चामृतसमन्वितम् ॥ १२ ॥

पञ्चखर्जूरसंयुक्तं नैवेद्यं विनिवोदयेत् ।
एवं सम्पूज्यमानोऽहं दद्यां वरमनुत्तमम् ॥ १३ ॥

तस्माद्वृन्दावने पुण्ये पञ्चपर्वसुपूजनम् ।
दर्शनं सुजनानां तु सर्वाघौघविनाशनम् ॥ १४ ॥

वादिराजाख्ययतिना ब्राह्मणस्वाप्नमूर्तिना ।
कृतं वृन्दावनाख्यानं पठतां सम्पदां पदम् ॥ १५ ॥

वेदनिदिध्याख्ययतिना वादिराजेन चोदितम् ।
स्वाप्नं वृन्दावनाख्यानं लिखितं प्रीतये गुरोः ॥ १६ ॥

माता राज मत्पिता वादिराजो भ्राता राजा मत्सखा वादिराजः ।
सर्वस्वं मे वादिराजो दयाळुर्नान्यद्दैवं नैव जाने न जाने ॥ १७ ॥

हरिभक्तिदयाम्बोधि तरलक्रीडनोत्सुकाः ।
गुरवो वादिराजार्याः करुणां वितरन्तु मे ॥ १८ ॥

इति अणुवृन्दावनाख्यानं सम्पूर्णम्

## श्री भूतराजमन्त्रम्

भूतराजनमस्तुभ्यं वादिराजगुरो प्रिय ।
विद्रवय समबाधाः सदा त्वं रक्षणं कुरु ॥ १ ॥

रक्तं विचित्र वसनं मणिकुण्डलाढ्यम् ।
बन्धूकपुष्प सदृशाधरपाणिपादम् ॥ २ ॥

उदयत् दिनेश किरणारुणदेह भाजम् ।
नारायणं नमत चापशरान् दधानम् ॥ ३ ॥

जय गुरुराज

श्री कृष्णार्पणमस्तु

श्री गुरुभ्यो नमः हरिः ॐ

॥ भारतीरमणमुख्यप्राणान्तर्गत श्रीकृष्णार्पणमस्तु ॥